स राजानमुपातिष्ठद्बाहुकोऽहमिति ब्रुवन् ।
अश्वानां वाहने युक्तः पृथिव्यां नास्ति मत्समः ॥ २ ॥
अर्थकृच्छ्रेषु चैवाहं प्रष्टव्यो नैपुणेषु च ।
अन्नसंस्कारमपि च जानाम्यन्यैर्विशेषतः ॥ ३ ॥
यानि शिल्पानि लोकेऽस्मिन्यच्चैवान्यत्सुदुष्करम् ।
सर्वं यतिष्ये तत्कर्तुमृतुपर्ण भरस्व माम् ॥ ४ ॥
इत्युक्तः स नलेनाथ ऋतुपर्णो नराधिपः ।
उवाच सुप्रीतमनास्तं प्रेक्ष्य च महीपते ॥ ५ ॥
वस बाहुक भद्रं ते सर्वमेतत्करिष्यसि ।
शीघ्रयाने सदा बुद्धिर्ध्रियते मे विशेषतः ॥ ६ ॥
स त्वमातिष्ठ योगं तं येन शीघ्रा हया मम ।
भवेयुरश्वाध्यक्षोसि वेतनं ते शतं शतम्[1] ॥ ७ ॥
त्वामुपस्थास्यतश्चैव नित्यं वार्ष्णेयजीवलौ ।
एताभ्यां रंस्यसे सार्धं वस वै मयि बाहुक ॥ ८ ॥

बृहदश्व उवाच ।

एवमुक्तो नलस्तेन न्यवसत्तत्र पूजितः ।
ऋतुपर्णस्य नगरे सहवार्ष्णेयजीवलः ॥ ९ ॥
स वै तत्रावसद्राजा वैदर्भीमनुचिन्तयन् ।
सायंसायं सदा चेमं श्लोकमेकं जगाद ह ॥ १० ॥
क्व नु सा क्षुत्पिपासार्ता श्रान्ता शेते तपस्विनी ।
स्मरन्ती तस्य मन्दस्य कं वा साद्योपतिष्ठति ॥ ११ ॥

---

१ 'शता' इति ग; 'शताः' इति क.

एवं ब्रुवन्तं राजानं निशायां जीवलोऽब्रवीत् ।
कामेनां शोचसे नित्यं श्रोतुमिच्छामि बाहुक ।
आयुष्मन्कस्य वा नारी यामेवमनुशोचसि ॥ १२ ॥
तमुवाच नलो राजा मन्दप्रज्ञस्य कस्यचित् ।
आसीद्बहुमता नारी तस्या दृढतरं वचः[1] ॥ १३ ॥
स वै केनचिदर्थेन तया मन्दो व्ययुज्यत ।
विप्रयुक्तः स मन्दात्मा भ्रमत्यसुखपीडितः ॥ १४ ॥
दह्यमानः स शोकेन दिवारात्रमतन्द्रितः ।
निशाकाले स्मरंस्तस्याः श्लोकमेकं स्म गायति ॥ १५ ॥
स विभ्रमन्महीं सर्वां क्वचिदासाद्य किंचन ।
वसत्यनर्हस्तद्दुःखं भूय एवानुसंस्मरन् ॥ १६ ॥
सा तु तं पुरुषं नारी कृच्छ्रेऽप्यनुगता वने ।
त्यक्ता तेनाल्पभाग्येन दुष्करं यदि जीवति ॥ १७ ॥
एका बालाऽनभिज्ञा च मार्गमाणाऽतथोचिता ।
क्षुत्पिपासापरीताङ्गी दुष्करं यदि जीवति ॥ १८ ॥
श्वापदाचरिते नित्यं वने महति दारुणे ।
त्यक्ता तेनाल्पभाग्येन मन्दप्रज्ञेन मारिष ॥ १९ ॥
इत्येवं नैषधो राजा दमयन्तीमनुस्मरन् ।
अज्ञातवासं न्यवसद्राज्ञस्तस्य निवेशने ॥ २० ॥

इति नलोपाख्याने पञ्चदशोऽध्यायः ।

---

1 'दृढतरश्च सः' इति म.

बृहदश्व उवाच ।

हृतराज्ये नले भीमः सभार्येऽदर्शनं[1] गते ।
चिन्तयामास बहुशः सहामात्यैर्नराधिपः ॥ १ ॥
समाहूय द्विजान्सर्वानिदं वचनमब्रवीत् ।
अग्रहारं च दास्यामि ग्रामं नगरसंमितम् ॥ २ ॥
दमयन्तीं नलं चैव पर्यन्वेषति यो द्विजः ।
गवां शतसहस्राणि दाता तस्मै द्विजातये ॥ ३ ॥
इत्युक्त्वा ब्राह्मणान्सर्वान्समाहूय द्विजोत्तमान् ।
प्रस्थापयामास तदा तयोर्दर्शनकाङ्क्षया ॥ ४ ॥
सन्दिदेश च तान्भीमो वसु दत्त्वा च पुष्कलम् ।
मृगयध्वं नलं चैव दमयन्तीं च मे सुताम् ॥ ५ ॥
अस्मिन्कर्मणि निष्पन्ने विज्ञाते निषधाधिपे ।
गवां सहस्रं दास्यामि यो वस्तावानयिष्यति ॥ ६ ॥
अग्रहारांश्च दास्यामि ग्रामं नगरसंमितम् ।
हिरण्यं च सुवर्णं च दासीदासं तथैव च ॥ ७ ॥
न चेच्छक्याविहानेतुं दमयन्ती नलोऽपि वा ।
ज्ञातमात्रेऽपि दास्यामि गवां दशशतं धनम् ॥ ८ ॥
इत्युक्तास्ते ययुर्हृष्टा ब्राह्मणाः सर्वतो दिशम् ।
पुरराष्ट्राणि चिन्वन्तो नैषधं सह भार्यया ।
नैव क्वापि प्रपश्यन्ति नलं वा भीमपुत्रिकाम् ॥ ९ ॥
ततश्चेदिपुरीं रम्यां सुदेवो नाम वै द्विजः ।
विचिन्वानोऽथ वैदर्भीमपश्यद्राजवेश्मनि ॥ १० ॥

---

१ 'प्रेष्यताम्' इति क–ग.

तथैव राजमाता च ब्राह्मणान्पर्यवेषयत् ।
भोजनार्थे सुदेवोऽपि तत्रैव प्रविवेश ह ॥ ११ ॥
कृशां विवर्णां मलिनां भर्तृशोकपरायणाम् ।
पुण्याहवाचने राज्ञः सुनन्दासहितां स्थिताम् ॥ १२ ॥
मन्दं प्रख्यायमानेन रूपेणाप्रतिमेन ताम् ।
निबद्धां धूमजालेन प्रभामिव विभावसोः ॥ १३ ॥
तां समीक्ष्य विशालाक्षीमधिकं मलिनां कृशाम् ।
तर्कयामास भैमीति कारणैरुपपादयन् ॥ १४ ॥

सुदेव उवाच ।

यथेयं मे पुरा दृष्टा तथारूपेयमङ्गना ।
कृतार्थोऽस्म्यद्य दृष्ट्वेमां लोककान्तामिव श्रियम् ॥ १५ ॥
पूर्णचन्द्राननां श्यामां चारुवृत्तपयोधराम् ।
कुर्वतीं प्रभया देवीं सर्वा वितिमिरा दिशः ॥ १६ ॥
चारुपद्मविशालाक्षीं मन्मथस्य रतीमिव ।
इष्टां समस्तलोकस्य पूर्णचन्द्रप्रभामिव ॥ १७ ॥
विदर्भसरसस्तस्माद्दैवदोषादिवोद्धृताम् ।
मलपङ्कानुलिप्ताङ्गीं मृणालीमिव चोद्धृताम्[1] ॥ १८ ॥
पौर्णमासीमिव निशां राहुग्रस्तनिशाकराम् ।
पतिशोकाकुलां दीनां कृशस्रोतां नदीमिव ॥ १९ ॥
विध्वस्तपर्णकमलां वित्रासितविहङ्गमाम् ।
हस्तिहस्तपरिक्लिष्टां[2] व्याकुलामिव पद्मिनीम् ॥ २० ॥

---

१ 'प्रम्लानां नलिनीमिव' इति म. २ 'परामृष्टाम्' इति क-ग.

सुकुमारीं सुजाताङ्गीं रत्नगर्भगृहोचिताम् ।
दह्यमानामिवार्केण मृणालीमिव चोद्धृताम् ॥ २१ ॥
रूपौदार्यगुणोपेतां मण्डनार्हाममण्डिताम् ।
चन्द्रलेखामिव नवां व्योम्नि नीलाभ्रसंवृताम् ॥ २२ ॥
कामभोगैः प्रियैर्हीनां हीनां बन्धुजनेन च ।
देहं धारयतीं दीनं भर्तृदर्शनकाङ्क्षया ॥ २३ ॥
भर्ता नाम परं नार्या भूषणं भूषणैर्विना ।
एषा हि रहिता तेन शोभमाना न शोभते ॥ २४ ॥
दुष्करं कुरुतेऽत्यन्तं हीनो यदनया नलः ।
धारयत्यात्मनो देहं न शोकेनापि सीदति ॥ २५ ॥
इमामसितकेशान्तां शतपत्रायतेक्षणाम् ।
सुखार्हां दुःखितां दृष्ट्वा ममापि व्यथते मनः ॥ २६ ॥
कदा नु खलु दुःखस्य पारं यास्यति वै शुभा ।
भर्तुः समागमात्साध्वी रोहिणी शशिनो यथा ॥ २७ ॥
अस्या नूनं पुनर्लाभान्नैषधः प्रीतिमेष्यति ।
राजा राज्यपरिभ्रष्टः पुनर्लब्ध्वेव[1] मेदिनीम् ॥ २८ ॥
तुल्यशीलवयोयुक्तां तुल्याभिजनसंवृताम् ।
नैषधोऽर्हति वैदर्भीं तं चेयमसितेक्षणा ॥ २९ ॥
युक्तं तस्याप्रमेयस्य वीर्यसत्त्ववतो मया ।
समाश्वासयितुं भार्यां पतिदर्शनलालसाम् ॥ ३० ॥
अहमाश्वासयाम्येनां पूर्णचन्द्रनिभाननाम् ।
अदृष्टदुःखां दुःखार्तां[2] ध्यानरोदनतत्पराम्[3] ॥ ३१ ॥

---

१ 'लब्ध्वा च' इति क-ग. २ 'अदृष्टपूर्वा दुःखस्य' क-ग. ३ 'ध्यानतत्पराम्' इति क-ग.

बृहदश्व उवाच ।

एवं विमृश्य विविधैः कारणैर्लक्षणैश्च ताम् ।
उपगम्य ततो भैमीं सुदेवो ब्राह्मणोऽब्रवीत् ॥ ३२ ॥
अहं सुदेवो वैदर्भि भ्रातुस्ते दयितः सखा ।
भीमस्य वचनाद्राज्ञस्त्वामन्वेष्टुमिहागतः ॥ ३३ ॥
कुशली ते पिता राज्ञि जननी भ्रातरश्च ते ।
आयुष्मन्तौ कुशलिनौ तत्रस्थौ दारकौ च ते ॥ ३४ ॥
त्वत्कृते बन्धुवर्गाश्च गतसत्त्वा इवासते ।
अन्वेष्टारो ब्राह्मणाश्च भ्रमन्ति शतशो महीम् ॥ ३५ ॥

बृहदश्व उवाच ।

अभिज्ञाय सुदेवं तं दमयन्ती युधिष्ठिर ।
पर्यपृच्छत तान्सर्वान्क्रमेण सुहृदः स्वकान् ॥ ३६ ॥
रुरोद च भृशं राजन्वैदर्भी शोककर्शिता ।
दृष्ट्वा सुदेवं सहसा भ्रातुरिष्टं द्विजोत्तमम् ॥ ३७ ॥
ततो रुदतीं तां दृष्ट्वा सुनन्दा शोककर्शिता ।
सुदेवेन सहैकान्ते कथयन्तीं च भारत ॥ ३८ ॥
जनित्र्याः प्रेषयामास सैरन्ध्री रुदते भृशम् ।
ब्राह्मणेन सहागम्य तां वेदे यदि मन्यसे ॥ ३९ ॥
अथ चेदिपतेर्माता राज्ञश्चान्तःपुरात्तदा ।
जगाम यत्र सा बाला ब्राह्मणेन सहाभवत् ॥ ४० ॥
ततः सुदेवमानाय्य राजमाता विशांपते ।
पप्रच्छ भार्या कस्येयं सुता वा कस्य भामिनी ॥ ४१ ॥

---

१ 'कथयामास' इति क-ग.  २ 'विद्धि' इति म.

कथं च नष्टा ज्ञातिभ्यो भर्तुर्वा वामलोचना ।
त्वया च विदिता विप्र कथमेवंगता सती ॥ ४२ ॥
एतदिच्छाम्यहं श्रोतुं त्वत्तः सर्वमशेषतः ।
तत्त्वेन हि ममाचक्ष्व पृच्छन्त्या देवरूपिणीम् ॥ ४३ ॥
एवमुक्तस्तया राजन्सुदेवो द्विजसत्तमः ।
सुखोपविष्ट आचष्ट दमयन्त्या यथातथम् ॥ ४४ ॥

इति नलोपाख्याने षोडशोऽध्यायः ।

---

सुदेव उवाच ।

विदर्भराजो धर्मात्मा भीमो भीमपराक्रमः ।
सुतेयं तस्य कल्याणी दमयन्तीति विश्रुता ॥ १ ॥
राजा तु नैषधो नाम वीरसेनसुतो नलः ।
भार्येयं तस्य कल्याणी पुण्यश्लोकस्य धीमतः ॥ २ ॥
स द्यूतेन जितो भ्रात्रा हृतराज्यो महामनाः ।
दमयन्त्या गतः सार्धं न प्राज्ञायत कस्यचित् ॥ ३ ॥
ते वयं दमयन्त्यर्थे चरामः पृथिवीमिमाम् ।
सेयमासादिता बाला तव पुत्रनिवेशने ॥ ४ ॥
अस्या रूपेण सदृशी मानुषी न हि विद्यते ।
अस्या ह्येष भ्रुवोर्मध्ये सहजः पिप्लुरुत्तमः ॥ ५ ॥
श्यामायाः पद्मसङ्काशो लक्षितोऽन्तर्हितो मया ।
मलेन संवृतो ह्यस्याश्छन्नोऽभ्रेणेव चन्द्रमाः ॥ ६ ॥

चिह्नभूतो विभूत्यर्थमयं धात्रा विनिर्मितः ।
प्रतिपत्कलुषस्येन्दोर्लेखा नातिविराजते ॥ ७ ॥
न चास्या नश्यते रूपं वपुर्मलसमाचितम् ।
असंस्कृतमपि व्यक्तं भाति काञ्चनसन्निभम् ॥ ८ ॥
अनेन वपुषा बाला पिप्लुनाऽनेन सूचिता ।
लक्षितेयं मया देवी निभृतोऽग्निरिवोष्मणा ॥ ९ ॥

बृहदश्व उवाच ।

तच्छ्रुत्वा वचनं तस्य सुदेवस्य विशांपते ।
सुनन्दा शोधयामास पिप्लुप्रच्छादनं मलम् ॥ १० ॥
स मलेनापकृष्टेन पिप्लुस्तस्या व्यरोचत ।
दमयन्त्या यथा व्यभ्रे नभसीव निशाकरः ॥ ११ ॥
पिप्लुं दृष्ट्वा सुनन्दा च राजमाता च भारत ।
रुदत्यौ तां परिष्वज्य मुहूर्तमिव तस्थतुः ॥ १२ ॥
उत्सृज्य बाष्पं शनकै राजमातेदमब्रवीत् ।
भगिन्या दुहिता मेऽसि पिप्लुनानेन सूचिता ॥ १३ ॥
अहं च तव माता च राज्ञस्तस्य महात्मनः ।
सुते दशार्णाधिपतेः सुदाम्नश्चारुदर्शने ॥ १४ ॥
भीमस्य राज्ञः सा दत्ता वीरबाहोरहं पुनः ।
त्वं तु जाता मया दृष्टा दशार्णेषु पितुर्गृहे ॥ १५ ॥
यथैव ते पितुर्गेहं तथैव मम भामिनि ।
यथैव च ममैश्वर्यं दमयन्ति तथा तव ॥ १६ ॥
तां प्रहृष्टेन मनसा दमयन्ती विशांपते ।
प्रणम्य मातुर्भगिनीमिदं वचनमब्रवीत् ॥ १७ ॥

---

१ 'कलुषेवेन्दोः' इति म. २ 'अभिव्यक्तम्' इति ग. ३ 'पिहितो' इति म.

अज्ञायमानाऽपि सती सुखमस्म्युषिता त्वयि ।
सर्वकामैः सुविहिता रक्ष्यमाणा सदा त्वया ॥ १८ ॥

सुखात्सुखतरो वासो भविष्यति न संशयः ।
चिरविप्रोषितां मातर्मामनुज्ञातुमर्हसि ॥ १९ ॥

दारकौ च हि मे नीतौ वसतस्तत्र बालकौ ।
पित्रा विहीनौ शोकार्तौ मया चैव कथं नु तौ ॥ २० ॥

यदि चापि प्रियं किञ्चिन्मयि कर्तुमिहेच्छसि ।
विदर्भान्यातुमिच्छामि शीघ्रं मे यानमादिश ॥ २१ ॥

बाढमित्येव तामुक्त्वा हृष्टा मातृष्वसा नृप ।
गुप्तां बलेन महता पुत्रस्यानुमते ततः ॥ २२ ॥

प्रास्थापयद्राजमाता श्रीमतीं नरवाहिना ।
यानेन भरतश्रेष्ठ स्वन्नपानपरिच्छदाम् ॥ २३ ॥

ततः सा नचिरादेव विदर्भानगमच्छुभा ।
तां तु बन्धुजनः सर्वः प्रहृष्टः समपूजयत् ॥ २४ ॥

सर्वान्कुशलिनो दृष्ट्वा बान्धवान्दारकौ च तौ ।
मातरं पितरं चोभौ सर्वं चैव सखीजनम् ॥ २५ ॥

देवताः पूजयामास ब्राह्मणांश्च यशस्विनी ।
परेण विधिना देवी दमयन्ती विशांपते ॥ २६ ॥

अतर्पयत्सुदेवं च गोसहस्रेण पार्थिवः ।
प्रीतो दृष्ट्वैव तनयां ग्रामेण द्रविणेन च ॥ २७ ॥

सा व्युष्टा रजनीं तत्र पितुर्वेश्मनि भामिनी ।
विश्रान्ता मातरं राजन्निदं वचनमब्रवीत् ॥ २८ ॥

दमयन्त्युवाच ।

मां चेदिच्छसि जीवन्तीं मातः सत्यं ब्रवीमि ते ।
नलस्य नरवीरस्य यतस्वानयने पुनः ॥ २९ ॥
दमयन्त्या तथोक्ता तु सा देवी भृशदुःखिता ।
बाष्पेणापिहिता राज्ञी नोत्तरं किञ्चिदब्रवीत् ॥ ३० ॥
तदवस्थां तु तां दृष्ट्वा सर्वमन्तःपुरं तदा ।
हाहाभूतमतीवासीद्भृशं च प्ररुरोद ह ॥ ३१ ॥
ततो भीमं महाराजं भार्या वचनमब्रवीत् ।
दमयन्ती तव सुता भर्तारमनुशोचति ॥ ३२ ॥
अपकृष्य च लज्जां सा स्वयमुक्तवती विभो ।
प्रयतन्तु तव प्रेष्याः पुण्यश्लोकस्य मार्गणे[1] ॥ ३३ ॥

बृहदश्व उवाच ।

तया प्रचोदितो राजा ब्राह्मणान्वशवर्तिनः ।
प्रास्थापयद्दिशः सर्वा यतध्वं नलमार्गणे ॥ ३४ ॥
ततो विदर्भाधिपतेर्नियोगाद्ब्राह्मणास्तदा ।
दमयन्तीमथापृच्छ्य प्रस्थितास्ते तथाऽब्रुवन् ॥ ३५ ॥
अथ तानब्रवीद्भैमी सर्वराष्ट्रेष्विदं वचः ।
ब्रूत वै जनसंसत्सु तत्र तत्र पुनः पुनः ॥ ३६ ॥
क्व नु त्वं कितव च्छित्त्वा वस्त्रार्धं प्रस्थितो मम ।
उत्सृज्य विपिने सुप्तामनुरक्तां प्रियां प्रिय ॥ ३७ ॥
सा वै यथा त्वया दृष्टा तथाऽऽस्ते त्वत्प्रतीक्षिणी ।
दह्यमाना भृशं बाला वस्त्रार्धेनाभिसंवृता ॥ ३८ ॥

---

१ 'दर्शने' इति म.

तस्या रुदत्याः सततं तेन शोकेन पार्थिव ।
प्रसादं कुरु वै देव प्रतिवाक्यं वदस्व च ॥ ३९ ॥
एवमन्यच्च वक्तव्यं कृपां कुर्याद्यथा मयि ।
वायुना धूयमानो हि वनं दहति पावकः ॥ ४० ॥
भर्तव्या रक्षणीया च पत्नी पत्या हि नित्यदा ।
तन्नष्टमुभयं कस्माद्धर्मज्ञस्य सतस्तव ॥ ४१ ॥
ख्यातः प्राज्ञः कुलीनश्च सानुक्रोशो भवान्सदा ।
संवृत्तो निरनुक्रोशः शङ्के मद्भाग्यसंक्षयात् ॥ ४२ ॥
तत्कुरुष्व नरव्याघ्र दयां मयि नरर्षभ ।
आनृशंस्यं परो धर्मस्त्वत्त एव हि मे श्रुतः ॥ ४३ ॥
एवं ब्रुवाणान्यदि वः प्रतिब्रूयाद्धि कश्चन ।
स नरः सर्वथा ज्ञेयः कश्चासौ क्व नु वर्तते ॥ ४४ ॥
यश्चैवं वचनं श्रुत्वा ब्रूयात्प्रतिवचो नरः ।
तदादाय वचस्तस्य ममावेद्यं द्विजोत्तमाः ॥ ४५ ॥
यथा च वो न जानीयाद्ब्रुवतो मम शासनात्[1] ।
पुनरागमनं चैव तथा कार्यमतन्द्रितैः ॥ ४६ ॥
यदि वाऽसौ समृद्धः स्याद्यदि वाऽप्यधनो भवेत् ।
यदिवाप्यसमर्थः स्याज्ज्ञेयमस्य चिकीर्षितम् ॥ ४७ ॥
एवमुक्तास्त्वगच्छंस्ते ब्राह्मणाः सर्वतो दिशम् ।
नलं मृगयितुं राजंस्तदा व्यसनिनं तथा ॥ ४८ ॥
ते पुराणि सराष्ट्राणि ग्रामान्घोषांस्तथाऽऽश्रमान् ।
अन्वेषन्तो नलं राजन्नाधिजग्मुर्द्विजातयः ॥ ४९ ॥

---

१ 'चरतो भीमशासनात्' इति **म.**

तच्च वाक्यं तथा सर्वे तत्र तत्र विशांपते ।
श्रावयाञ्चक्रिरे विप्रा दमयन्त्या यथेरितम् ॥ ५० ॥

इति नलोपाख्याने सप्तदशोऽध्यायः ।

---

बृहदश्व उवाच ।

अथ दीर्घस्य कालस्य पर्णादो नाम वै द्विजः ।
प्रत्येत्य नगरं भैमीमिदं वचनमब्रवीत् ॥ १ ॥
नैषधं मृगयाणेन दमयन्ति दिवानिशम् ।
अयोध्यां नगरीं गत्वा भाङ्गासुरिरुपस्थितः[1] ॥ २ ॥
श्रावितश्च मया वाक्यं त्वदीयं स महाजने ।
ऋतुपर्णो महाभागो यथोक्तं वरवर्णिनि ॥ ३ ॥
तच्छ्रुत्वा नाब्रवीत्किञ्चिदृतुपर्णो नराधिपः ।
न च पारिषदः कश्चिद्भाष्यमाणो मयाऽसकृत् ॥ ४ ॥
अनुज्ञातं तु मां राज्ञा विजने कश्चिदब्रवीत् ।
ऋतुपर्णस्य पुरुषो बाहुको नाम नामतः ॥ ५ ॥
सूतस्तस्य नरेन्द्रस्य विरूपो ह्रस्वबाहुकः ।
शीघ्रयानेषु कुशलो मृष्टकर्ता च भोजने ॥ ६ ॥
स विनिःश्वस्य बहुशो रुदित्वा च पुनः पुनः ।
कुशलं चैव मां पृष्ट्वा पश्चादिदमभाषत ॥ ७ ॥
वैषम्यमपि संप्राप्ता गोपायन्ति कुलस्त्रियः ।
आत्मानमात्मना सत्यो जितः स्वर्गो न संशयः ॥ ८ ॥

---

१ 'भागस्वरिः' इति म; 'भाङ्गासुरिम्' इति ग.

रहिता भर्तृभिश्चैव न कुप्यन्ति कदाचन ।
प्राणांश्चारित्रकवचान्धारयन्ति वरस्त्रियः ॥ ९ ॥
विषमस्थेन मूढेन परिभ्रष्टसुखेन च ।
यत्सा तेन परित्यक्ता तत्र न क्रोद्धुमर्हति ॥ १० ॥
प्राणयात्रां परिप्रेप्सोः शकुनैर्हृतवाससः ।
आधिभिर्दह्यमानस्य श्यामा न क्रोद्धुमर्हति ॥ ११ ॥
सत्कृताऽसत्कृता वाऽपि पतिं दृष्ट्वा तथागतम् ।
भ्रष्टराज्यं श्रिया हीनं क्षुधितं व्यसनाप्लुतम् ॥ १२ ॥
तस्य तद्वचनं श्रुत्वा त्वरितोऽहमिहागतः ।
श्रुत्वा प्रमाणं भवती राज्ञश्चैव निवेदय ॥ १३ ॥
एतच्छ्रुत्वाऽश्रुपूर्णाक्षी पर्णादस्य विशांपते ।
दमयन्ती रहोऽभ्येत्य मातरं प्रत्यभाषत ॥ १४ ॥
अयमर्थो न संवेद्यो भीमे मातः कदाचन ।
त्वत्सन्निधौ नियोक्ष्येऽहं सुदेवं द्विजसत्तमम् ॥ १५ ॥
यथा न नृपतिर्भीमः प्रतिपद्येत मे मतम् ।
तथा त्वया प्रकर्तव्यं मम चेत्प्रियमिच्छसि ॥ १६ ॥
यथा चाहं समानीता सुदेवेनाशु बान्धवान् ।
तेनैव मङ्गलेनाशु सुदेवो यातु मा चिरम् ॥ १७ ॥
समानेतुं नलं मातरयोध्यां नगरीमितः ।
ऋतुपर्णस्य नगरे निवसन्तमरिन्दमम् ॥ १८ ॥
विश्रान्तं तु ततः पश्चात्पर्णादं द्विजसत्तमम् ।
अर्चयामास वैदर्भी धनेनातीव भाविनी ॥ १९ ॥

---

१ 'श्यामा न क्रोद्धुमर्हति' इति म.

उवाच चैनं महता सम्पूज्य द्रविणेन वै ।
नले चेहागते विप्र भूयो दास्यामि ते वसु ॥ २० ॥
त्वया हि मे बहु कृतं यदन्यो न करिष्यति ।
यद्भर्त्राऽहं समेष्यामि शीघ्रमेव द्विजोत्तम ॥ २१ ॥
स एवमुक्तोऽथाश्वास्य आशीर्वादैः सुमङ्गलैः ।
गृहानुपययौ चापि कृतार्थः सुमहामनाः ॥ २२ ॥
ततः सुदेवमानाय्य दमयन्ती युधिष्ठिर ।
अब्रवीत्सन्निधौ मातुर्दुःखशोकसमन्विता ॥ २३ ॥
गत्वा सुदेव नगरीमयोध्यावासिनं नृपम् ।
ऋतुपर्णं वचो ब्रूहि सम्पतन्निव कामगः ॥ २४ ॥
आस्थास्यति पुनर्भैमी दमयन्ती स्वयंवरम् ।
तत्र गच्छन्ति राजानो राजपुत्राश्च सर्वशः ॥ २५ ॥
तथा च गणितः कालः श्वोभूते स भविष्यति ।
यदि संभाविनीयं ते गच्छ शीघ्रमरिन्दम ॥ २६ ॥
सूर्योदये द्वितीयं सा भर्तारं वरयिष्यति ।[1]
न हि स ज्ञायते वीरो नलो जीवति वा न वा ॥ २७ ॥[2]
एवं तया यथोक्तो वै गत्वा राजानमब्रवीत् ।
ऋतुपर्णं महाराज सुदेवो ब्राह्मणस्तदा ॥ २८ ॥

इति नलोपाख्यानेऽष्टादशोऽध्यायः ।

---

१ 'पतिमन्यं चिकीर्षती' इति **म.** २ 'जीवन्मृतोऽपि वा' इति **म.**

बृहदश्व उवाच ।

श्रुत्वा वचः सुदेवस्य ऋतुपर्णो नराधिपः ।
सान्त्वयञ्श्लक्ष्णया वाचा बाहुकं प्रत्यभाषत ॥ १ ॥
विदर्भान्यातुमिच्छामि दमयन्त्याः स्वयंवरम् ।
एकाह्ना हयतत्त्वज्ञ मन्यसे यदि बाहुक ॥ २ ॥
एवमुक्तस्य कौन्तेय तेन राज्ञा नलस्य ह ।
व्यदीर्यत मनो दुःखात्प्रदध्यौ च महामनाः ॥ ३ ॥
दमयन्ती वदेदेतत्कुर्याद्दुःखेन मोहिता ।
अस्मदर्थे भवेद्वाऽयमुपायश्चिन्तितो महान् ॥ ४ ॥
नृशंसं बत वैदर्भी कर्तुकामा तपस्विनी ।
मया क्षुद्रेण निकृता कृपणा पापबुद्धिना ॥ ५ ॥
स्त्रीस्वभावश्चलो लोके मम दोषश्च दारुणः ।
स्यादेवमपि कुर्यात्सा विवासाद्गतसौहृदा ॥ ६ ॥
मम शोकेन संविग्ना नैराश्यात्तनुमध्यमा ।
नैवं सा कर्हिचित्कुर्यात्सापत्या च विशेषतः ॥ ७ ॥
यदत्र सत्यं वाऽसत्यं गत्वा वेत्स्यामि निश्चयम् ।
ऋतुपर्णस्य वै काममात्मार्थं च करोम्यहम् ॥ ८ ॥
इति निश्चित्य मनसा बाहुको दीनमानसः ।
कृताञ्जलिरुवाचेदमृतुपर्णं जनाधिपम् ॥ ९ ॥
प्रतिजानामि ते वाक्यं गमिष्यामि नराधिप ।
एकाह्ना पुरुषव्याघ्र विदर्भनगरीं नृप ॥ १० ॥
ततः परीक्षामश्वानां चक्रे राजन्स बाहुकः ।
अश्वशालामुपागम्य भाङ्गासुरिनृपाज्ञया ॥ ११ ॥

---

१ 'भवेत्' इति क; 'भवेदेवम्' इति म. २ 'भर्तृकामा' इति क–ग.

स त्वर्यमाणो बहुश ऋतुपर्णेन बाहुकः ।
अश्वाञ्जिज्ञासमानो वै विचार्य च पुनः पुनः ॥ १२ ॥

अध्यगच्छत्कृशानश्वान्समर्थानध्वनि क्षमान् ।
तेजोबलसमायुक्तान्कुलशीलसमन्वितान् ॥ १३ ॥

वर्जिताँल्लक्षणैर्हीनैः पृथुप्रोथान्महाहनून् ।
शुद्धान्दशभिरावर्तैः सिन्धुजान्वातरंहसः ॥ १४ ॥

तान्दृष्ट्वा दुर्बलान्राजा प्राह कोपसमन्वितः ।
किमिदं प्रार्थितं कर्तुं प्रलब्धव्या न ते वयम् ॥ १५ ॥

कथमल्पबलप्राणा वक्ष्यन्तीमे हया रथम् ।
महानध्वा[1] स चैकाह्ना गन्तव्यः कथमीदृशैः ॥ १६ ॥

**बाहुक उवाच ।**

एको ललाटे द्वौ मूर्ध्नि द्वौ द्वौ पार्श्वोपपार्श्वयोः ।
द्वौ द्वौ वक्षसि विज्ञेयौ प्रयाणे चैक एव तु ॥ १७ ॥

एते हया गमिष्यन्ति विदर्भान्नात्र संशयः ।
यानन्यान्मन्यसे राजन्ब्रूहि तान्योजयामि ते ॥ १८ ॥

**ऋतुपर्ण उवाच ।**

त्वमेव हयतत्त्वज्ञः कुशलो ह्यसि बाहुक ।
यान्मन्यसे समर्थांस्त्वं क्षिप्रं तानेव योजय ॥ १९ ॥

ततः सदश्वांश्चतुरः कुलशीलसमन्वितान् ।
योजयामास कुशलो जवयुक्तान्रथे नलः ॥ २० ॥

ततो युक्तं रथं राजा समारोहत्त्वरान्वितः
अथ पर्यपतन्भूमौ जानुभिस्ते हयोत्तमाः ॥ २१ ॥

---

१ 'महदध्वानमपि च गन्तव्यम्' इति **क–ग.**

ततो नरवरः श्रीमान्नलो राजा विशांपते ।
सान्त्वयामास तानश्वांस्तेजोबलसमन्वितान् ॥ २२ ॥
रश्मिभिश्च समुद्यम्य नलो यातुमियेष सः ।
सूतमारोप्य वार्ष्णेयं जवमास्थाय वै परम् ॥ २३ ॥
ते चोद्यमाना विधिवद्बाहुकेन हयोत्तमाः ।
समुत्पेतुरिवाकाशं रथिनं मोहयन्ति च ॥ २४ ॥
तथा तु दृष्ट्वा तानश्वान्वहतो वातरंहसः ।
अयोध्याधिपतिः श्रीमान्विस्मयं परमं ययौ ॥ २५ ॥
रथघोषं तु तं श्रुत्वा हयसङ्ग्रहणं च तत् ।
वार्ष्णेयश्चिन्तयामास बाहुकस्य हयज्ञताम् ॥ २६ ॥
किं नु स्यान्मातलिरयं देवराजस्य सारथिः ।
तथा तल्लक्षणं वीरे बाहुके दृश्यते महत् ॥ २७ ॥
शालिहोत्रोऽथ किं नु स्याद्धयानां कुलतत्त्ववित् ।
मानुषं समनुप्राप्तो वपुः परमशोभनम् ॥ २८ ॥
उताहोस्विद्भवेद्राजा नलः परपुरञ्जयः ।
सोयं नृपतिरायात इत्येवं समचिन्तयत् ॥ २९ ॥
अथ चेदिह नलो विद्यां वेत्ति तामेव बाहुकः ।
तुल्यं हि लक्षये ज्ञानं बाहुकस्य नलस्य च ॥ ३० ॥
अपि चेदं वयस्तुल्यं बाहुकस्य नलस्य च ।
नायं नलो महावीर्यस्तद्विद्यश्च भविष्यति ॥ ३१ ॥
प्रच्छन्ना हि महात्मानश्चरन्ति पृथिवीमिमाम् ।
दैवेन विधिना युक्ताः शास्त्रोक्तैश्च निरूपणैः ॥ ३२ ॥

---

१ 'अथवाऽयं नलात्प्राप्तो विद्याम्' इति म.

भवेन्न मतिभेदो मे गात्रवैरूप्यतां प्रति ।
प्रमाणात्परिहीनस्तु भवेदिति मतिर्मम ॥ ३३ ॥
वयःप्रमाणं तत्तुल्यं रूपेण तु विपर्ययः ।
नलं सर्वगुणैर्युक्तं मन्ये बाहुकमन्ततः ॥ ३४ ॥
एवं विचार्य बहुशो वार्ष्णेयः पर्यचिन्तयत् ।
हृदयेन महाराज पुण्यश्लोकस्य सारथिः ॥ ३५ ॥
ऋतुपर्णश्च राजेन्द्रो बाहुकस्य हयज्ञताम् ।
चिन्तयन्मुमुदे राजा सहवार्ष्णेयसारथिः ॥ ३६ ॥
ऐकाग्र्यं च तथोत्साहं हयसङ्ग्रहणं च तत् ।
[1]परं यत्नं च संप्रेक्ष्य परां मुदमवाप ह ॥ ३७ ॥

इति नलोपाख्यान एकोनविंशतितमोऽध्यायः ।

---

**बृहदश्व उवाच ।**

स नदीः पर्वतांश्चैव वनानि च सरांसि च ।
अचिरेणातिचक्राम खेचरः खे चरन्निव ॥ १ ॥
तथा प्रयाते तु रथे तदा भाङ्गासुरिर्नृपः ।
उत्तरीयमधोपश्यद्भ्रष्टं परपुरञ्जयः ॥ २ ॥
ततः स त्वरमाणस्तु पटे निपतिते तदा ।
ग्रहीष्यामीति तं राजा नलमाह महामनाः ॥ ३ ॥
निगृह्णीष्व महाबुद्धे हयानेतान्महाजवान् ।
वार्ष्णेयो यावदेनं मे पटमानयतामिह ॥ ४ ॥

---

१ 'कौशलं चापि' इति म.

नलस्तं प्रत्युवाचाथ दूरे भ्रष्टः पटस्तव ।
योजनं समतिक्रान्तो नाहर्तुं शक्यते पुनः ॥ ५ ॥
एवमुक्ते नलेनाथ नातिप्रीतमना[1] नृपः ।
आससाद वने राजन्फलवन्तं बिभीतकम् ॥ ६ ॥
तं दृष्ट्वा बाहुकं राजा त्वरमाणोऽभ्यभाषत ।
ममापि सूत पश्य त्वं संख्याने परमं बलम् ॥ ७ ॥
सर्वः सर्वं न जानाति सर्वज्ञो नास्ति कश्चन ।
नैकत्र परिनिष्ठाऽस्ति ज्ञानस्य पुरुषे क्वचित् ॥ ८ ॥
वृक्षेऽस्मिन्यानि पर्णानि फलान्यपि च बाहुक ।
पतितान्यपि यान्यत्र तत्रैकमधिकं [2]शतम् ॥ ९ ॥
एकपत्राधिकं चात्र फलमेकं च बाहुक ।
[3]पञ्च कोट्योऽथ पत्राणां द्वयोरपि च शाखयोः ॥ १० ॥
प्रचिनुह्यस्य शाखे द्वे याश्चाप्यन्याः प्रशाखिकाः ।
आभ्यां फलसहस्रे द्वे पञ्चोनं शतमेव च ॥ ११ ॥
ततो रथ[4]मवस्थाप्य राजानं बाहुकोऽब्रवीत् ।
परोक्षमिव मे राजन्कत्थसे शत्रुकर्शन ॥ १२ ॥
प्रत्यक्षमेतत्कर्ताऽस्मि शातयित्वा बिभीतकम् ।
अथात्र गणिते राजन्विद्यते न परोक्षता ॥ १३ ॥
प्रत्यक्षं ते महाराज शातयिष्ये बिभीतकम् ।
अहं हि नाभिजानामि भवेदेवं न वेति वा ॥ १४ ॥
संख्यास्यामि फलान्यस्य पश्यतस्ते जनाधिप ।
मुहूर्तमपि वार्ष्णेयो रश्मीन्यच्छतु वाजिनाम् ॥ १५ ॥

---

१ 'तदा भाङ्गासुरिः' इति क–ग. २ 'कृतम्' इति म. ३ 'फलकोट्यपि' इति म. ४ 'रथादवप्लुत्य' इति म.

तमब्रवीन्नृपः सूतं नायं कालो विलम्बितुम् ।
बाहुकस्त्वब्रवीदेनं परं यत्नं समास्थितः ॥ १६ ॥
प्रतीक्षस्व मुहूर्तं त्वमथवा त्वरते भवान् ।
एष याति शिवः पन्था याहि वार्ष्णेयसारथिः ॥ १७ ॥
अब्रवीदृतुपर्णस्तं सान्त्वयन्कुरुनन्दन ।
त्वमेव यन्ता नान्योस्ति पृथिव्यामपि बाहुक ॥ १८ ॥
त्वत्कृते यातुमिच्छामि विदर्भान्हयकोविद ।
शरणं त्वां प्रपन्नोस्मि न विघ्नं कर्तुमर्हसि ॥ १९ ॥
कामं च ते करिष्यामि यन्मां वक्ष्यसि बाहुक ।
विदर्भान्यदि यात्वाऽद्य सूर्यं दर्शयितासि मे ॥ २० ॥
अथाब्रवीद्बाहुकस्तं संख्याय च बिभीतकम् ।
ततो विदर्भान्यास्यामि कुरुष्वैवं वचो मम ॥ २१ ॥
अकाम इव तं राजा गणयस्वेत्युवाच ह ।
एकदेशं च शाखायाः समादिष्टं मयाऽनघ ॥ २२ ॥
गणयस्वाश्वतत्त्वज्ञ ततस्त्वं प्रीतिमावह ।
सोऽवतीर्य रथात्तूर्णं शातयामास तं द्रुमम् ॥ २३ ॥
ततः स विस्मयाविष्टो राजानमिदमब्रवीत् ।
गणयित्वा यथोक्तानि तावन्त्येव फलानि तु ॥ २४ ॥
अत्यद्भुतमिदं राजन्दृष्टवानस्मि ते बलम् ।
श्रोतुमिच्छामि तां विद्यां ययैतज्ज्ञायते नृप ॥ २५ ॥
तमुवाच ततो राजा त्वरितो गमने नृप ।
विद्ध्यक्षहृदयज्ञं मां संख्याने च विशारदम् ॥ २६ ॥

बाहुकस्तमुवाचाथ देहि विद्यामिमां मम।
मत्तोऽपि चाश्वहृदयं गृहाण पुरुषर्षभ ॥ २७ ॥
ऋतुपर्णस्ततो राजा बाहुकं कार्यगौरवात्।
हयज्ञानस्य लोभाच्च तं तथेत्यब्रवीद्वचः ॥ २८ ॥
यथोक्तं त्वं गृहाणेदमक्षाणां हृदयं परम्।
निक्षेपो मेऽश्वहृदयं त्वयि तिष्ठतु बाहुक।
एवमुक्त्वा ददौ विद्यामृतुपर्णो नलाय वै ॥ २९ ॥
तस्याक्षहृदयज्ञस्य शरीरान्निःसृतः कलिः।
कर्कोटकविषं तीक्ष्णं मुखात्सततमुद्वमन् ॥ ३० ॥
कलेस्तस्य तदार्तस्य शापाग्निः स विनिःसृतः।
स तेन कर्शितो राजा दीर्घकालमनात्मवान् ॥ ३१ ॥
ततो विषविमुक्तात्मा स्वरूपमकरोत्कलिः।
तं शप्तुमैच्छत्कुपितो निषधाधिपतिर्नलः ॥ ३२ ॥
तमुवाच कलिर्भीतो वेपमानः कृताञ्जलिः।
कोपं संयच्छ नृपते कीर्तिं दास्यामि ते पराम् ॥ ३३ ॥
इन्द्रसेनस्य जननी कुपिता माऽशपत्पुरा।
यदा त्वया परित्यक्ता ततोऽहं भृशपीडितः ॥ ३४ ॥
अवसं त्वयि राजेन्द्र सुदुःखमपराजित।
विषेण नागराजस्य दह्यमानो दिवानिशम् ॥ ३५ ॥
शरणं त्वां प्रपन्नोस्मि शृणु चेदं वचो मम।
ये च त्वां मनुजा लोके कीर्तयिष्यन्त्यतन्द्रिताः ॥ ३६ ॥

---

१ 'विद्याद्वयं च मे' इति म.

मत्प्रसूतं भयं तेषां न कदाचिद्भविष्यति ।
भयार्तं शरणं यातं यदि मां त्वं न शप्स्यसे ॥ ३७ ॥
एवमुक्तो नलो राजा न्ययच्छत्कोपमात्मनः ।
ततो भीतः कलिः क्षिप्रं प्रविवेश बिभीतकम् ।
कलिस्त्वन्येन नो दृष्टः कथयन्नैषधेन वै ॥ ३८ ॥
ततो गतज्वरो राजा नैषधः परवीरहा ।
संप्रनष्टे कलौ राजा संख्यायास्य फलान्युत ॥ ३९ ॥
मुदा परमया युक्तस्तेजसाऽथ परेण वै ।
रथमारुह्य तेजस्वी प्रययौ जवनैर्हयैः ॥ ४० ॥
बिभीतकश्चाप्रशस्तः संवृत्तः कलिसंश्रयात् ।
ततः प्रभृति राजेन्द्र लोकेऽस्मिन्पाण्डुनन्दन ॥ ४१ ॥
हयोत्तमानुत्पततो द्विजानिव पुनः पुनः ।
नलः सञ्चोदयामास प्रहृष्टेनान्तरात्मना ॥ ४२ ॥
विदर्भाभिमुखो राजा प्रययौ स महायशाः ।
नले तु समतिक्रान्ते कलिरप्यगमद्गृहम् ॥ ४३ ॥
ततो गतज्वरो राजा नलोऽभूत्पृथिवीपतिः ।
विमुक्तः कलिना राजन्रूपमात्रवियोजितः ॥ ४४ ॥

इति नलोपाख्याने विंशतितमोऽध्यायः ।

---

बृहदश्व उवाच ।

ततो विदर्भान्संप्राप्तं सायाह्ने सत्यविक्रमम् ।
ऋतुपर्णं जना राज्ञे भीमाय प्रत्यवेदयन् ॥ १ ॥

---

१ 'अन्यैस्तदाऽदृश्यः' इति क-ग.

स भीमवचनाद्राजा कुण्डिनं प्राविशत्पुरम् ।
नादयन्रथघोषेण सर्वाः सविदिशो दिशः ॥ २ ॥

ततस्तं रथनिर्घोषं नलाश्वास्तत्र शुश्रुवुः ।
श्रुत्वा तु समहृष्यन्त पुरेव नलसन्निधौ ॥ ३ ॥

दमयन्ती तु शुश्राव रथघोषं नलस्य तम् ।
यथा मेघस्य नदतो गम्भीरं जलदागमे ॥ ४ ॥
परं विस्मयमापन्ना श्रुत्वा नादं महास्वनम् ।
नलेन सङ्गृहीतेषु पुरेव नलवाजिषु ।
सदृशं रथनिर्घोषं मेने भैमी तथा हयाः ॥ ५ ॥

प्रासादस्थाश्च शिखिनः शालास्थाश्चैव वारणाः ।
हयाश्च शुश्रुवुस्तस्य रथघोषं महीपतेः ॥ ६ ॥
तच्छ्रुत्वा रथनिर्घोषं वारणाः शिखिनस्तथा ।
प्रणेदुरुन्मुखा राजन्दृष्ट्वेव जलदोदयम् ॥ ७ ॥

दमयन्त्युवाच ।

यथाऽसौ रथनिर्घोषः पूरयन्निव मेदिनीम् ।
ममाह्लादयते चेतो नल एष महीपतिः ॥ ८ ॥
अद्य चन्द्राभवक्त्रं तं न पश्यामि नलं यदि ।
असंख्येयगुणं वीरं विनङ्क्ष्यामि न संशयः ॥ ९ ॥

यदि वै तस्य वीरस्य बाह्वोर्नाद्याहमन्तरम् ।
प्रविशामि सुखस्पर्शं न भविष्याम्यसंशयम् ॥ १० ॥
यदि मां मेघनिर्घोषो नोपगच्छति नैषधः ।
अद्य चामीकरप्रख्यं प्रवेक्ष्यामि हुताशनम् ॥ ११ ॥

यदि मां सिंहविक्रान्तो मत्तवारणविक्रमः ।
नाभिगच्छति राजेन्द्रो विनङ्क्ष्यामि न संशयः ॥ १२ ॥
न स्मराम्यनृतं किञ्चिन्न स्मराम्यपकारताम् ।
न च पर्युषितं वाक्यं स्वैरेष्वपि कदाचन ॥ १३ ॥
प्रभुः क्षमावान्वीरश्च दाता चाप्यधिको नृपैः ।
रहोऽनीचानुवर्ती च क्लीबवन्मम नैषधः ॥ १४ ॥
गुणांस्तस्य स्मरन्त्या मे तत्पराया दिवानिशम् ।
हृदयं दीर्यत इदं शोकात्प्रियविनाकृतम् ॥ १५ ॥
एवं विलपमाना सा नष्टसञ्ज्ञेव भारत ।
आरुरोह महद्वेश्म पुण्यश्लोकदिदृक्षया ॥ १६ ॥
ततो मध्यमकक्षायां ददर्श रथमास्थितम् ।
ऋतुपर्णं महीपालं सहवार्ष्णेयबाहुकम् ॥ १७ ॥
ततोऽवतीर्य वार्ष्णेयो बाहुकश्च रथोत्तमात् ।
हयांस्तानवमुच्याथ स्थापयामासतू रथम् ॥ १८ ॥
सोऽवतीर्य रथोपस्थादृतुपर्णो नराधिपः ।
उपतस्थे महाराजं भीमं भीमपराक्रमम् ॥ १९ ॥
तं भीमः प्रतिजग्राह पूजया परया ततः ।
स तेन पूजितो राज्ञा ऋतुपर्णो नराधिपः ॥ २० ॥
स तत्र कुण्डिने रम्ये वसमानो महीपतिः ।
न च किञ्चित्तदाऽपश्यत्प्रेक्षमाणो मुहुर्मुहुः ॥ २१ ॥
स तु राज्ञा समागम्य विदर्भपतिना तदा ।
अकस्मात्सहसा प्राप्तं स्त्रीमन्त्रं न स विन्दति ॥ २२ ॥
किं कार्यं स्वागतं तेऽस्तु राज्ञा पृष्टः स भारत ।
नाभिजज्ञे स नृपतिर्दुहित्रर्थे समागतम् ॥ २३ ॥

ऋतुपर्णोपि राजा स धीमान्सत्यपराक्रमः ।
राजानं राजपुत्रं वा न स पश्यति कंचन ।
नैव स्वयंवरकथां न च विप्रसमागमम् ॥ २४ ॥
ततो विगणयद्राजा मनसा कोसलाधिपः ।
आगतोसीत्युवाचैनं भवन्तमभिवादकः ॥ २५ ॥
राजापि च स्मयन्भीमो मनसा समचिन्तयत् ।
अधिकं योजनशतं तस्यागमनकारणम् ।
ग्रामान्बहूनतिक्रम्य नाध्यगच्छद्यथातथम् ॥ २६ ॥
अल्पकार्यं विनिर्दिष्टं तस्यागमनकारणम् ।
पश्चादुदर्के ज्ञास्यामि कारणं यद्भविष्यति ॥ २७ ॥
नैतदेवं स नृपतिस्तं सत्कृत्य व्यसर्जयत् ।
विश्राम्यतामित्युवाच क्लान्तोसीति पुनः पुनः ॥ २८ ॥
स सत्कृतः प्रहृष्टात्मा प्रीतः प्रीतेन पार्थिवः ।
राजप्रेष्यैरनुगतो दिष्टं वेश्म समाविशत् ॥ २९ ॥
ऋतुपर्णे गते राजन्वार्ष्णेयसहिते नृपे ।
बाहुको रथमादाय रथशालामुपागमत् ॥ ३० ॥
स मोचयित्वा तानश्वानुपचर्य च शास्त्रतः ।
स्वयं चैतान्समाश्वास्य रथोपस्थ उपाविशत् ॥ ३१ ॥
दमयन्त्यपि शोकार्ता दृष्ट्वा भाङ्गासुरिं नृपम् ।
सूतपुत्रं च वार्ष्णेयं बाहुकं च तथाविधम् ॥ ३२ ॥
चिन्तयामास वैदर्भी कस्यैष रथनिःस्वनः ।
नलस्येव महानासीन्न च पश्यामि नैषधम् ॥ ३३ ॥
वार्ष्णेयेन भवेन्नूनं विद्या सैवोपशिक्षिता ।
तेनाद्य रथनिर्घोषो नलस्येव महानभूत् ॥ ३४ ॥

आहोस्विदृतुपर्णोऽपि यथा राजा नलस्तथा ।
तथाऽयं रथनिर्घोषो नैषधस्येव लक्ष्यते ॥ ३५ ॥
एवं सा तर्कयित्वा तु दमयन्ती विशांपते ।
दूतीं प्रस्थापयामास नैषधान्वेषणे शुभा ॥ ३६ ॥

इति नलोपाख्यान एकविंशोऽध्यायः ।

---

दमयन्त्युवाच ।

गच्छ केशिनि जानीहि क एष रथवाहकः ।
उपविष्टो रथोपस्थे विकृतो ह्रस्वबाहुकः ॥ १ ॥
अभ्येत्य कुशलं भद्रे मृदुपूर्वं समाहिता ।
पृच्छेथाः पुरुषं ह्येनं यथातत्त्वमनिन्दिते ॥ २ ॥
अत्र मे महती शङ्का भवेदेष नलो नृपः ।
यथा च मनसस्तुष्टिर्हृदयस्य च निर्वृतिः ॥ ३ ॥
ब्रूयाश्चैनं कथान्ते त्वं पर्णादवचनं यथा ।
प्रतिवाक्यं च सुश्रोणि बुध्येथास्त्वमनिन्दिते ॥ ४ ॥
ततः समाहिता गत्वा दूती बाहुकमब्रवीत् ।
दमयन्त्यपि कल्याणी प्रासादस्था ह्युपैक्षत[1] ॥ ५ ॥

केशिन्युवाच ।

स्वागतं ते मनुष्येन्द्र कुशलं ते ब्रवीम्यहम् ।
दमयन्त्या वचः साधु निबोध पुरुषर्षभ ॥ ६ ॥

---

१ 'अन्ववैक्षत' इति म.

कदा वै प्रस्थिता यूयं किमर्थमिह चागताः ।
तत्त्वं ब्रूहि यथान्यायं वैदर्भी श्रोतुमिच्छति ॥ ७ ॥

बाहुक उवाच ।

श्रुतः स्वयंवरो राज्ञा कोसलेन महात्मना ।
द्वितीयो दमयन्त्या वै भविता श्व इति द्विजात् ॥ ८ ॥
श्रुत्वैतत्प्रस्थितो राजा शतयोजनयायिभिः ।
हयैर्वातजवैर्मुख्यैरहमस्य च सारथिः ॥ ९ ॥

केशिन्युवाच ।

अथ योऽसौ तृतीयो वः स कुतः कस्य वा पुनः ।
त्वं च कस्य कथं चेदं त्वयि कर्म समाहितम् ॥ १० ॥

बाहुक उवाच ।

पुण्यश्लोकस्य वै सूतो वार्ष्णेय इति विश्रुतः ।
स नले विद्रुते भद्रे भाङ्गासुरिमुपस्थितः ॥ ११ ॥
अहमप्यश्वकुशलः सूतत्वे च प्रतिष्ठितः ।
ऋतुपर्णेन सारथ्ये भोजने च वृतः स्वयम् ॥ १२ ॥

केशिन्युवाच ।

अथ जानाति वार्ष्णेयः क्व नु राजा नलो गतः ।
कथं च त्वयि वा तेन कथितं स्यात्तु बाहुक ॥ १३ ॥

बाहुक उवाच ।

इहैव पुत्रौ निक्षिप्य नलस्य प्रियदर्शनौ ।
गतस्ततो यथाकामं नैष जानाति नैषधम् ॥ १४ ॥
न चान्यः पुरुषः कश्चिन्नलं वेत्ति यशस्विनि ।
गूढश्चरति लोकेऽस्मिन्नष्टरूपो महीपतिः ॥ १५ ॥

आत्मैव तु नलं वेद या चास्य तदनन्तरा ।
न हि वै स्वानि लिङ्गानि नलं शंसन्ति[1] कर्हिचित् ॥ १६ ॥

केशिन्युवाच ।

योऽसावयोध्यां प्रथमं गतोऽसौ ब्राह्मणस्तदा ।
इमानि नारीवाक्यानि कथयानः पुनः पुनः ॥ १७ ॥
क्व नु त्वं कितव च्छित्त्वा वस्त्रार्धं प्रस्थितो मम ।
उत्सृज्य विपिने सुप्तामनुरक्तां प्रियां प्रिय ॥ १८ ॥
सा वै यथा समादिष्टा तथाऽऽस्ते त्वत्प्रतीक्षिणी ।
दह्यमाना दिवा रात्रौ वस्त्रार्धेनाभिसंवृता ॥ १९ ॥
तस्या रुदन्त्याः सततं तेन दुःखेन पार्थिव ।
प्रसादं कुरु मे वीर प्रतिवाक्यं वदस्व च ॥ २० ॥
तस्यास्तत्प्रियमाख्यानं प्रवदस्व महामते ।
तदेव वाक्यं वैदर्भी श्रोतुमिच्छत्यनिन्दिता ॥ २१ ॥
एतच्छ्रुत्वा प्रतिवचस्तस्य दत्तं त्वया किल ।
यत्पुरा तत्पुनस्त्वत्तो वैदर्भी श्रोतुमिच्छति ॥ २२ ॥

बृहदश्व उवाच ।

एवमुक्तस्य केशिन्या नलस्य कुरुनन्दन ।
हृदयं व्यथितं चासीदश्रुपूर्णे च लोचने ॥ २३ ॥
स निग्राह्यात्मनो दुःखं दह्यमानो महीपतिः ।
बाष्पसन्दिग्धया वाचा पुनरेवेदमब्रवीत् ॥ २४ ॥
वैषम्यमपि संप्राप्ता गोपायन्ति कुलस्त्रियः ।
आत्मानमात्मना सत्यो जितः स्वर्गो न संशयः ॥ २५ ॥

---

१ 'नलः शंसति' इति क-ग.

रहिता भर्तृभिश्चापि न क्रुध्यन्ति कदाचन ।
प्राणांश्चारित्रकवचान्धारयन्ति वरस्त्रियः ॥ २६ ॥
विषमस्थेन मूढेन परिभ्रष्टसुखेन च ।
यत्सा तेन परित्यक्ता तत्र न क्रोद्धुमर्हति ॥ २७ ॥
प्राणयात्रां परिप्रेप्सोः शकुनैर्हृतवाससः ।
आधिभिर्दह्यमानस्य श्यामा न क्रोद्धुमर्हति ॥ २८ ॥
सत्कृताऽसत्कृता वाऽपि पतिं दृष्ट्वा तथाविधम् ।
राज्यभ्रष्टं श्रिया हीनं क्षुधितं व्यसनाप्लुतम् ॥ २९ ॥
एवं ब्रुवाणस्तद्वाक्यं नलः परमदुर्मनाः ।
न बाष्पमशकत्सोढुं प्ररुरोद च भारत ॥ ३० ॥
ततः सा केशिनी गत्वा दमयन्त्यै न्यवेदयत् ।
तत्सर्वं कथितं चैव विकारं तस्य चैव तम् ॥ ३१ ॥

इति नलोपाख्याने द्वाविंशोऽध्यायः ।

बृहदश्व उवाच ।

केशिन्यास्तद्वचः श्रुत्वा दमयन्ती विशांपते ।
शङ्कमाना नलं तं वै केशिनीमिदमब्रवीत् ॥ १ ॥
गच्छ केशिनि भूयस्त्वं परीक्षां कुरु बाहुके ।
अब्रुवाणा समीपस्था चरितान्यस्य लक्षय ॥ २ ॥
यदा च किञ्चित्कुर्यात्स कारणं तत्र भामिनि ।
तत्र सञ्चेष्टमानस्य संलक्षेथा विचेष्टितम् ॥ ३ ॥

न चास्य प्रतिबन्धेन देयोऽग्निरपि केशिनि ।
याचते न जलं देयं सर्वथा[1] त्वरमाणया ॥ ४ ॥
एतत्सर्वं समीक्ष्य त्वं चरितं मे निवेदय ।
निमित्तं यत्त्वया दृष्टं बाहुके दैवमानुषम् ।
यच्चान्यदपि पश्येथास्तच्चाख्येयं त्वया मम ॥ ५ ॥
दमयन्त्यैवमुक्ता सा जगामाथ च केशिनी ।
निशम्याथ हयज्ञस्य लिङ्गानि पुनरागमत् ॥ ६ ॥
सा तत्सर्वं यथावृत्तं दमयन्त्यै न्यवेदयत् ।
निमित्तं यत्तया दृष्टं बाहुके दिव्यमानुषम् ॥ ७ ॥

केशिन्युवाच ।

दृढं शुच्युपचारोऽसौ[2] न मया मानुषः क्वचित् ।
दृष्टपूर्वः श्रुतो वाऽपि दमयन्ति तथाविधः ॥ ८ ॥
ह्रस्वमासाद्य सञ्चारं[3] नासौ विनमते क्वचित् ।
तं तु दृष्ट्वा यथासङ्गमुत्सर्पति यथासुखम् ।
सङ्कटेऽप्यस्य सुमहद्विवरं जायतेऽधिकम् ॥ ९ ॥
ऋतुपर्णस्य चार्थाय भोजनीयमनेकशः ।
प्रेषितं तत्र राज्ञा तु मांसं बहु च पाशवम् ॥ १० ॥
तस्य प्रक्षालनार्थाय कुम्भास्तत्रोपकल्पिताः ।
ते तेनावेक्षिताः कुम्भाः पूर्णा एवाभवंस्ततः ॥ ११ ॥
ततः प्रक्षालनं कृत्वा समधिश्रित्य बाहुकः ।
तृणमुष्टिं समादाय सवितुस्तं समादधत् ॥ १२ ॥

---

१ 'सकृच्चात्वरमाणया' इति म. २ 'शुच्यपदानोसौ' इति म. ३ 'तु द्वारम्' इति ग.

अथ प्रज्वलितस्तत्र सहसा हव्यवाहनः ।
तदद्भुततमं दृष्ट्वा विस्मिताऽहमिहागता ॥ १३ ॥
अन्यच्च तस्मिन्सुमहदाश्चर्यं लक्षितं मया ।
यदग्निमपि संस्पृश्य नैवासौ दह्यते शुभे ॥ १४ ॥
छन्देन चोदकं तस्य वहत्यावर्जितं द्रुतम् ।
अतीव चान्यत्सुमहदाश्चर्यं दृष्टवत्यहम् ॥ १५ ॥
यत्स पुष्पाण्युपादाय हस्ताभ्यां ममृदे शनैः ।
मृद्यमानानि पाणिभ्यां तेन पुष्पाणि नान्यथा ॥ १६ ॥
भूय एव सुगन्धीनि हृषितानि भवन्ति हि ।
एतान्यद्भुतलिङ्गानि[1] दृष्ट्वाऽहं द्रुतमागता ॥ १७ ॥

बृहदश्व उवाच ।

दमयन्ती तु तच्छ्रुत्वा पुण्यश्लोकस्य चेष्टितम् ।
अमन्यत नलं प्राप्तं कर्मचेष्टाभिसूचितम् ॥ १८ ॥
सा शङ्कमाना भर्तारं बाहुकं[2] पुनरिङ्गितैः ।
केशिनीं श्लक्ष्णया वाचा रुदती पुनरब्रवीत् ॥ १९ ॥
पुनर्गच्छ प्रमत्तस्य बाहुकस्योपसंस्कृतम् ।
महानसाच्छ्रितं मांसमानयस्वेह भामिनि ॥ २० ॥
सा गत्वा बाहुके व्यग्रे तन्मांसमपकृष्य च ।
अत्युष्णमेव त्वरिता तत्क्षणात्प्रियकारिणी ।
दमयन्त्यै ततः प्रादात्केशिनी कुरुनन्दन ॥ २१ ॥
सोचिता[3] नलसिद्धस्य मांसस्य बहुशः पुरा ।
प्राश्य मत्वा नलं सूतं प्राक्रोशद्भृशदुःखिता ॥ २२ ॥

---

१ 'अद्भुतकल्पानि' इति म. २ 'नलं बाहुकरूपिणम्' इति म. ३ 'साऽशिता' इति म.

वैक्लव्यं परमं गत्वा प्रक्षाल्य च मुखं ततः ।
मिथुनं प्रेषयामास केशिन्या सह भारत ॥ २३ ॥
इन्द्रसेनां सह भ्रात्रा समभिज्ञाय बाहुकः ।
अभिद्रुत्य तदा राजा परिष्वज्याङ्कमानयत् ॥ २४ ॥
बाहुकस्तु समासाद्य सुतौ सुरसुतोपमौ ।
भृशं दुःखपरीतात्मा सुस्वरं प्ररुरोद ह ॥ २५ ॥
नैषधो दर्शयित्वा तु विकारमसकृत्तदा ।
उत्सृज्य सहसा पुत्रौ केशिनीमिदमब्रवीत् ॥ २६ ॥
इदं च सदृशं भद्रे मिथुनं मम पुत्रयोः ।
अतो दृष्ट्वैव सहसा बाष्पमुत्सृष्टवानहम् ॥ २७ ॥
बहुशः सम्पतन्तीं त्वां जनः शङ्केत दोषतः ।
वयं च देशातिथयो गच्छ भद्रे यथासुखम् ॥ २८ ॥

इति नलोपाख्याने त्रयोविंशतितमोऽध्यायः।

---

बृहदश्व उवाच ।

सर्वं विकारं दृष्ट्वा तु पुण्यश्लोकस्य धीमतः ।
आगत्य केशिनी क्षिप्रं दमयन्त्यै न्यवेदयत् ॥ १ ॥
दमयन्ती ततो भूयः प्रेषयामास केशिनीम् ।
मातुः सकाशं दुःखार्ता नलशङ्कासमुत्सुका ॥ २ ॥
परीक्षितो मे बहुशो बाहुको नलशङ्कया ।
रूपे मे संशयस्त्वेकः स्वयमिच्छामि वेदितुम् ॥ ३ ॥
स वा प्रवेश्यतां मातर्मां वाऽनुज्ञातुमर्हसि ।
विदितं वाऽथवाऽज्ञातं पितुर्मे संविधीयताम् ॥ ४ ॥

एवमुक्ता तु वैदर्भ्या सा देवी भीममब्रवीत् ।
दुहितुस्तमभिप्रायमन्वजानात्स पार्थिवः ॥ ५ ॥
सा वै पित्राऽभ्यनुज्ञाता मात्रा च भरतर्षभ ।
तयोर्नियोगात्कौरव्य केशिनीमिदमब्रवीत् ॥ ६ ॥
गच्छ केशिनि शीघ्रं त्वं बाहुकं पितृशासनात् ।
आनयस्व यथा माता त्वं तथा कुरु मे प्रियम् ॥ ७ ॥
गत्वा तु केशिनी शीघ्रं बाहुकं वाक्यमब्रवीत् ।
भीमस्य शासनात्सूतागताहं विद्धि बाहुक ॥ ८ ॥
प्रविश्यतां राजवेश्म इत्युक्तो भरतर्षभ ।
बाहुकस्तु चिरं ध्यात्वा केशिन्या सह भारत ॥ ९ ॥
प्रविवेश महाबाहुर्दमयन्तीनिवेशनम् ।
नलं प्रवेशयामास यत्र तस्याः प्रतिश्रयः ॥ १० ॥
तां स्म दृष्ट्वैव सहसा दमयन्तीं नलो नृपः ।
आविष्टः शोकदुःखाभ्यां बभूवाश्रुपरिप्लुतः ॥ ११ ॥
तं तु दृष्ट्वा तथायुक्तं दमयन्ती नलं तदा ।
तीव्रशोकसमाविष्टा बभूव वरवर्णिनी ॥ १२ ॥
ततः काषायवसना जटिला मलपङ्किनी ।
दमयन्ती महाराज बाहुकं वाक्यमब्रवीत् ॥ १३ ॥
पूर्वं दृष्टस्त्वया कश्चिद्धर्मज्ञो नाम बाहुक ।
सुप्तामुत्सृज्य विपिने गतो यः पुरुषः स्त्रियम् ॥ १४ ॥
अनागसं प्रियां भार्यां विजने श्रममोहिताम् ।
अपहाय तु को गच्छेत्पुण्यश्लोकमृते नलम् ॥ १५ ॥
किमु तस्य मया बाल्यादपराद्धं महीपतेः ।
यो मामुत्सृज्य विपिने गतवान्निद्रयाऽर्दिताम् ॥ १६ ॥

साक्षाद्देवानपाहाय वृतो यः स पुरा मया ।
अनुव्रतामभिमतां पुत्रिणीं त्यक्तवान्कथम् ॥ १७ ॥
अग्नौ पाणिं[1] गृहीत्वा तु देवानामग्रतस्तथा ।
भविष्यामीति[2] सत्यं तु प्रतिश्रुत्य क तद्गतम् ॥ १८ ॥

बृहदश्व उवाच ।

दमयन्त्या ब्रुवन्त्यास्तु सर्वमेतदरिन्दम ।
शोकजं वारि नेत्राभ्यामसुखं प्रास्रवद्बहु ॥ १९ ॥
अतीव कृष्णसाराभ्यां[3] रक्तान्ताभ्यां जलं तु तत् ।
परिस्रवन्नलो राजा शोकार्त इदमब्रवीत् ॥ २० ॥
मम राज्यं प्रनष्टं यन्नाहं तत्कृतवान्स्वयम् ।
कलिना तत्कृतं भीरु यच्च त्वामहमत्यजम् ॥ २१ ॥
त्वया तु पापः कृच्छ्रेण शापेनाभिहतः पुरा ।
वनस्थया दुःखितया शोचन्त्या मां दिवानिशम् ॥ २२ ॥
स मच्छरीरे त्वच्छापाद्दह्यमानोऽवसत्कलिः ।
त्वच्छापदग्धः सततं सोऽग्नावग्निरिवाहितः ॥ २३ ॥
मम च व्यवसायेन तपसा चैव निर्जितः ।
दुःखस्यान्तेन चानेन भवितव्यं हि नौ शुभे ॥ २४ ॥
विमुच्य मां गतः पापस्ततोऽहमिह चागतः ।
त्वदर्थं विपुलश्रोणि न हि मेऽन्यत्प्रयोजनम् ॥ २५ ॥
कथं तु नारी भर्तारमनुरक्तमनुव्रतम् ।
उत्सृज्य वरयेदन्यं यथा त्वं भीरु कर्हिचित् ॥ २६ ॥

---

१ 'पाणिगृहीतां च हंसानां वचने स्थिताम्' इति म. २ 'भरिष्यामि' इति म. ३ 'कृष्णताराभ्याम्' इति म.

दूताश्चरन्ति पृथिवीं कृत्स्नां नृपतिशासनात् ।
भैमी किल स्म भर्तारं द्वितीयं वरयिष्यति ॥ २७ ॥
स्वैरवृत्ता यथाकाममनुरूपमिवात्मनः ।
श्रुत्वैव चैवं त्वरितो भाङ्गासुरिरुपस्थितः ॥ २८ ॥
दमयन्ती तु तच्छ्रुत्वा नलस्य परिदेवितम् ।
प्राञ्जलिर्वेपमाना च भीता वचनमब्रवीत् ॥ २९ ॥
न मामर्हसि कल्याण दोषेण[1] परिशङ्कितुम् ।
मया हि देवानुत्सृज्य वृतस्त्वं निषधाधिप ॥ ३० ॥
तवाभिगमनार्थं तु सर्वतो ब्राह्मणा गताः ।
वाक्यानि मम गाथाभिर्गायमाना दिशो दश ॥ ३१ ॥
ततस्त्वां ब्राह्मणो विद्वान्पर्णादो नाम पार्थिव ।
अभ्यगच्छत्कोसलायामृतुपर्णनिवेशने ॥ ३२ ॥
तेन वाक्ये कृते सम्यक्प्रतिवाक्ये तथा हृते ।
उपायोऽयं मया दृष्टो नैषधानयने तव ॥ ३३ ॥
त्वामृते नहि लोकेऽन्य एकाह्ना पृथिवीपते ।
समर्थो योजनशतं गन्तुमश्वैर्नराधिप ॥ ३४ ॥
स्पृशेयं तेन सत्येन पादावेतौ महीपते ।
यथा नासत्कृतं किञ्चिन्मनसाऽपि चराम्यहम् ॥ ३५ ॥
अयं चरति लोकेऽस्मिन्भूतसाक्षी सदागतिः ।
एष मे मुञ्चतु प्राणान्यदि पापं चराम्यहम् ॥ ३६ ॥
यथा चरति तिग्मांशुः परितो[2] भुवनं सदा ।
स मुञ्चतु मम प्राणान्यदि पापं चराम्यहम् ॥ ३७ ॥

---

१ 'पापेन' इति म.   २ 'परेण' इति क–ग.

चन्द्रमाः सर्वभूतानामन्तश्चरति साक्षिवत् ।
स मुञ्चतु मम प्राणान्यदि पापं चराम्यहम् ॥ ३८ ॥
एते देवास्त्रयः कृत्स्नं त्रैलोक्यं धारयन्ति वै ।
विब्रुवन्तु यथा सत्यमेतद्देवास्त्यजन्तु माम् ॥ ३९ ॥
एवमुक्ते ततो वायुरन्तरिक्षादभाषत ।
नैषा कृतवती पापं नल सत्यं ब्रवीमि ते ॥ ४० ॥
राजञ्शीलनिधिः स्फीतो दमयन्त्या सुरक्षितः ।
साक्षिणो रक्षिणश्चास्या वयं त्रीन्परिवत्सरान् ॥ ४१ ॥
उपायो विहितश्चायं त्वदर्थमतुलोऽनया ।
न ह्येकाह्ना शतं गन्ता त्वामृतेऽन्यः पुमानिह ॥ ४२ ॥
उपपन्ना त्वया भैमी त्वं च भैम्या महीपते ।
नात्र शङ्का त्वया कार्या सङ्गच्छ सह भार्यया ॥ ४३ ॥
तथा ब्रुवति वायौ तु पुष्पवृष्टिः पपात ह ।
देवदुन्दुभयो नेदुर्ववौ च पवनः शिवः ॥ ४४ ॥
तदद्भुतमयं दृष्ट्वा नलो राजाऽथ भारत ।
दमयन्त्यां विशङ्कां तामुपाकर्षदरिन्दमः ॥ ४५ ॥
ततस्तद्वस्त्रमरजः प्रावृणोद्वसुधाधिपः ।
संस्मृत्य नागराजं तं ततो लेभे स्वकं वपुः ॥ ४६ ॥
स्वरूपिणं तु भर्तारं दृष्ट्वा भीमसुता तदा ।
प्राक्रोशदुच्चैरालिङ्ग्य पुण्यश्लोकमनिन्दिता ॥ ४७ ॥
भैमीमपि नलो राजा भ्राजमानो यथा पुरा ।
सस्वजे स्वसुतौ चापि यथावत्प्रत्यनन्दत ॥ ४८ ॥
ततः स्वोरसि विन्यस्य वक्त्रं तस्य शुभानना ।
परीता तेन दुःखेन निशश्वासायतेक्षणा ॥ ४९ ॥

तथैव मलदिग्धाङ्गीं परिष्वज्य शुचिस्मिताम् ।
सुचिरं पुरुषव्याघ्रस्तस्थौ शोकपरिप्लुतः ॥ ५० ॥
ततः सर्वं यथावृत्तं दमयन्त्या नलस्य च ।
भीमायाकथयत्प्रीत्या वैदर्भ्या जननी नृप ॥ ५१ ॥
ततोऽब्रवीन्महाराजः कृतशौचमहं नलम् ।
दमयन्त्या सहोपेतं कल्ये द्रष्टा सुखोषितम् ॥ ५२ ॥
ततस्तौ सहितौ रात्रिं कथयन्तौ पुरातनम् ।
वने विचरितं सर्वमूषतुर्मुदितौ नृप ॥ ५३ ॥
गृहे भीमस्य नृपतेः परस्परसुखैषिणौ ।
वसेतां हृष्टसङ्कल्पौ वैदर्भी च नलश्च ह ॥ ५४ ॥
स चतुर्थे ततो वर्षे सङ्गम्य सह भार्यया ।
सर्वकामैः सुसिद्धार्थो लब्धवान्परमां मुदम् ॥ ५५ ॥
दमयन्त्यपि भर्तारमासाद्याप्यायिता भृशम् ।
अर्धसञ्जातसस्येव तोयं प्राप्य वसुन्धरा ॥ ५६ ॥

सैवं समेत्य व्यपनीय तन्द्रां
शान्तज्वरा हर्षविवृद्धसत्त्वा ।
रराज भैमी समवाप्तकामा
शीतांशुना रात्रिरिवोदितेन ॥ ५७ ॥

इति नलोपाख्याने चतुर्विंशतितमोऽध्यायः ।

बृहदश्व उवाच ।

अथ तां व्युषितो रात्रिं नलो राजा स्वलङ्कृतः ।
वैदर्भ्या सहितः काले[1] ददर्श वसुधाधिपम् ॥ १ ॥
ततोऽभिवादयामास प्रयतः श्वशुरं नलः ।
ततो नु दमयन्ती च ववन्दे पितरं शुभा ॥ २ ॥
तं भीमः प्रतिजग्राह पुत्रवत्परया मुदा ।
यथार्हं पूजयित्वा च समाश्वासयत प्रभुः ॥ ३ ॥
नलेन सहितां तत्र दमयन्तीं पतिव्रताम् ।
अनुजग्राह महता सत्कारेण क्षितीश्वरः ॥ ४ ॥
तामर्हणां नलो राजा प्रतिगृह्य यथाविधि ।
परिचर्यां स्वकां तस्मै यथावत्प्रत्यवेदयत् ॥ ५ ॥
ततो बभूव नगरे सुमहान्हर्षजः स्वनः ।
जनस्य संप्रहृष्टस्य नलं दृष्ट्वा तथाऽऽगतम् ॥ ६ ॥
अशोभयच्च नगरीं पताकाध्वजमालिनीम् ।
सिक्ताः सुमृष्टपुष्पाढ्या राजमार्गाः स्वलङ्कृताः ॥ ७ ॥
द्वारि द्वारि च पौराणां पुष्पभङ्गः[2] प्रकल्पितः ।
अर्चितानि च सर्वाणि देवतायतनानि च ॥ ८ ॥
ऋतुपर्णोऽपि शुश्राव बाहुकच्छद्मिनं नलम् ।
दमयन्त्या समायुक्तं जहृषे च नराधिपः ॥ ९ ॥
तमानाय्य नलं राजा क्षमयामास पार्थिवम्[3] ।
स च तं क्षमयामास हेतुभिर्बुद्धिसंमितः ॥ १० ॥
स सत्कृतो महीपालो नैषधं विस्मिताननः ।

---

१ 'काल्यम्' इति म. २ 'भङ्गोपकल्पिताः' इति क—ग. ३ 'पार्थिवः' इति म.

उवाच वाक्यं तत्त्वज्ञो नैषधं वदतांवरः ।
दिष्ट्या समेतो दारैः स्वैर्भवानित्यभ्यनन्दत ॥ ११ ॥
कच्चित्तु नापराधं ते कृतवानस्मि नैषध ।
अज्ञातवासे वसतो मद्गृहे वसुधाधिप ॥ १२ ॥
यदि वाऽबुद्धिपूर्वाणि यदि बुद्ध्याऽपि कानिचित् ।
मया कृतान्यकार्याणि तानि त्वं क्षन्तुमर्हसि ॥ १३ ॥

नल उवाच ।

न मेऽपराधं कृतवांस्त्वं स्वल्पमपि पार्थिव ।
कृतेऽपि च न मे कोपः क्षन्तव्यं हि मया तव ॥ १४ ॥
पूर्वं ह्यपि सखा मेऽसि सम्बन्धी च जनाधिप ।
अत ऊर्ध्वं तु भूयस्त्वं प्रीतिमाहर्तुमर्हसि ॥ १५ ॥
सर्वकामैः सुविहितैः सुखमस्म्युषितस्त्वयि ।
न तथा स्वगृहे राजन्यथा तव गृहे सदा ॥ १६ ॥
इदं चैव हयज्ञानं त्वदीयं मयि तिष्ठति ।
तदुपाकर्तुमिच्छामि मन्यसे यदि पार्थिव ॥ १७ ॥
एवमुक्त्वा ददौ विद्यामृतुपर्णाय नैषधः ।
स च तां प्रतिजग्राह विधिदृष्टेन कर्मणा ॥ १८ ॥
गृहीत्वा चाश्वहृदयं प्रीतो भाङ्गासुरिर्नृपः ।
निषधाधिपतेश्चापि दत्त्वाऽक्षहृदयं नृपः ।
सूतमन्यमुपादाय ययौ स्वपुरमेव ह ॥ १९ ॥
ऋतुपर्णे गते राजन्नलो राजा विशांपते ।
नगरे कुण्डिने कालं नातिदीर्घमिवावसत् ॥ २० ॥

इति नलोपाख्याने पञ्चविंशतितमोऽध्यायः ।

बृहदश्व उवाच ।

स मासमुष्य कौन्तेय भीममामन्त्र्य नैषधः
पुरादल्पपरीवारो जगाम निषधान्प्रति ॥ १ ॥
रथेनैकेन शुभ्रेण दन्तिभिः परिषोडशैः ।
पञ्चाशद्भिर्हयैश्चैव षट्शतैश्च पदातिभिः ॥ २ ॥
स कम्पयन्निव महीं त्वरमाणो महापुरीम् ।
प्रविवेशाथ संरब्धस्तरसैव महामनाः ॥ ३ ॥
ततः पुष्करमासाद्य वीरसेनसुतो नलः ।
उवाच दीव्याव पुनर्बहु वित्तं मयाऽर्जितम् ॥ ४ ॥
दमयन्ती च यच्चान्यन्मम किञ्चन विद्यते ।
एष वै मम संन्यासस्तव राज्यं तु पुष्कर ॥ ५ ॥
पुनः प्रवर्ततां द्यूतमिति मे निश्चिता मतिः ।
एकपाणेन भद्रं ते प्राणयोश्च पणावहे ॥ ६ ॥
जित्वा परस्वमाहृत्य राज्यं वा यदि वा वसु ।
प्रतिपाणः प्रदातव्यः [1]परमो धर्म उच्यते ॥ ७ ॥
न चेद्वाञ्छसि तद्द्यूतं युद्धद्यूतं प्रवर्तताम् ।
द्वैरथेनास्तु वै शान्तिस्तव वा मम वा नृप ॥ ८ ॥
वंशभोज्यमिदं राज्यमर्थितव्यं यथा तथा ।
येन केनाप्युपायेन वृद्धानामिति शासनम् ॥ ९ ॥
द्वयोरेकतरे बुद्धिः क्रियतामद्य पुष्कर ।
कैतवेनाक्षवत्यां वा युद्धे वा नाम्यतां धनुः ॥ १० ॥
नैषधेनैवमुक्तस्तु पुष्करः प्रहसन्निव ।
ध्रुवमात्मजयं मत्वा प्रत्याह निषधाधिपम् ॥ ११ ॥

---

१ 'प्राणो हि पणमुच्यते' इति म.

दिष्ट्या त्वयाऽर्जितं वित्तं प्रतिपाणाय नैषध ।
दिष्ट्या च दुष्कृतं कर्म दमयन्त्याः क्षयं गतम् ॥ १२ ॥
दिष्ट्या च[1] ध्रियसे राजन्सदारोऽद्य महाभुज ॥ १३ ॥
धनेनानेन वै भैमी जितेन समलङ्कृता ।
मामुपस्थास्यति व्यक्तं दिवि शक्रमिवाप्सराः ॥ १४ ॥
नित्यशो हि स्मरामि त्वां प्रतीक्षेऽपि च नैषध ।
देवने[2] च मम प्रीतिर्भवत्येवासुहृद्गणैः ॥ १५ ॥
जित्वा त्वद्य वरारोहां दमयन्तीमनिन्दिताम् ।
कृतकृत्यो भविष्यामि सा हि मे नित्यशो हृदि ॥ १६ ॥
श्रुत्वा तु तस्य ता वाचो बह्वबद्धप्रलापिनः ।
इयेष स शिरश्छेत्तुं खड्गेन कुपितो नलः ॥ १७ ॥
स्मयंस्तु रोषताम्राक्षस्तमुवाच नलो नृपः ।
पणावः किं व्याहरसे जितो न व्याहरिष्यसि ॥ १८ ॥
ततः प्रावर्तत द्यूतं पुष्करस्य नलस्य च ।
एकपाणेन भद्रं ते नलेन स पराजितः ॥ १९ ॥
स रत्नकोशनिचयैः प्राणेन पणितोपि च ।
जित्वा च पुष्करं राजा प्रहसन्निदमब्रवीत् ॥ २० ॥
मम सर्वमिदं राज्यमव्यग्रं हतकण्टकम् ।
वैदर्भी न त्वया शक्या राजापसद वीक्षितुम् ।
तस्यास्त्वं सपरीवारो मूढ दासत्वमागतः ॥ २१ ॥
न त्वया तत्कृतं कर्म येनाहं विजितः पुरा ।
कलिना तत्कृतं कर्म त्वं च मूढ न बुध्यसे ॥ २२ ॥

---

१ 'वै प्रीयसे राजन्मम लाभाय नैषध' इति **क-ग.** २ 'देवनेन मम प्रीतिर्न भवत्यसुहृद्गणैः' इति **क-ग.**

नाहं परकृतं दोषं त्वय्याधास्ये कथञ्चन ।
यथासुखं वै जीव त्वं प्राणानवसृजामि ते ॥ २३ ॥
तथैव सर्वसम्भारं स्वमंशं वितरामि ते ।
तथैव च मम प्रीतिस्त्वयि वीर न संशयः ॥ २४ ॥
सौहार्दं चापि मे त्वत्तो न कदाचित्प्रहास्यति ।
पुष्कर त्वं हि मे भ्राता सञ्जीव शरदः शतम् ॥ २५ ॥
एवं नलः सान्त्वयित्वा भ्रातरं सत्यविक्रमः ।
वचनैस्तोषयामास परिष्वज्य पुनः पुनः ॥ २६ ॥
सान्त्वितो नैषधेनैवं पुष्करः प्रत्युवाच तम् ।
पुण्यश्लोकं तदा राजन्नभिवाद्य कृताञ्जलिः ॥ २७ ॥
कीर्तिरस्तु तवाक्षय्या जीव वर्षायुतं सुखी ।
यो मे वितरसि प्राणानधिष्ठानं च पार्थिव ॥ २८ ॥
स तथा सत्कृतो राज्ञा मासमुष्य तदा नृपः ।
प्रययौ पुष्करो हृष्टः स्वपुरं स्वजनावृतः ॥ २९ ॥
महत्या सेनया सार्धं विनीतैः परिचारकैः ।
भ्राजमान इवादित्यो वपुषा पुरुषर्षभ ॥ ३० ॥
प्रस्थाप्य पुष्करं राजा वित्तवन्तमनामयम् ।
प्रविवेश पुरं श्रीमानत्यर्थमुपशोभिताम् ॥ ३१ ॥
प्रविश्य सान्त्वयामास पौरांश्च निषधाधिपः ॥ ३२ ॥
पौरा जानपदाश्चापि सम्प्रहृष्टतनूरुहाः ।
ऊचुः प्राञ्जलयः सर्वे सामात्यप्रमुखा जनाः ॥ ३३ ॥
अद्य स्म निर्वृता राजन्पुरे जनपदेऽपि च ।
उपासितुं पुनः प्राप्ता देवा इव शतक्रतुम् ॥ ३४ ॥

इति नलोपाख्याने षड्विंशतितमोऽध्यायः ।

बृहदश्व उवाच ।

प्रशान्ते तु पुरे हृष्टे संप्रवृत्ते महोत्सवे ।
महत्या सेनया राजा दमयन्तीमुपानयत् ॥ १ ॥
दमयन्तीमपि पिता सत्कृत्य परवीरहा ।
प्रास्थापयदमेयात्मा भीमो भीमपराक्रमः ॥ २ ॥
आगतायां तु वैदर्भ्यां सपुत्रायां नलो नृपः ।
वर्तयामास मुदितो देवराडिव नन्दने ॥ ३ ॥
तथा प्रकाशतां यातो जम्बूद्वीपे स राजसु ।
पुनः [1]शशास तद्राज्यं प्रत्याहृत्य महायशाः ॥ ४ ॥
ईजे च विविधैर्यज्ञैर्विधिवच्चाप्तदक्षिणैः ।
तथा त्वमपि राजेन्द्र ससुहृद्यक्ष्यसेऽचिरात् ॥ ५ ॥
दुःखमेतादृशं प्राप्तो नलः परपुरञ्जयः ।
देवनेन नरश्रेष्ठ सभार्यो भरतर्षभ ॥ ६ ॥
एकाकिनैव सुमहन्नलेन पृथिवीपते ।
दुःखमासादितं घोरं प्राप्तश्चाभ्युदयः पुनः ॥ ७ ॥
त्वं पुनर्भ्रातृसहितः कृष्णया चैव पाण्डव ।
रमसेऽस्मिन्महारण्ये धर्ममेवानुचिन्तयन् ॥ ८ ॥
ब्राह्मणैश्च महाभागैर्वेदवेदाङ्गपारगैः ।
नित्यमन्वास्यसे राजंस्तत्र का परिदेवना ॥ ९ ॥
कर्कोटकस्य नागस्य दमयन्त्या नलस्य च ।
ऋतुपर्णस्य राजर्षेः कीर्तनं कलिनाशनम् ॥ १० ॥

---

१ 'स्वे चावसद्राज्ये' इति म.

इतिहासमिमं चापि कलिनाशनमच्युत ।
शक्यमाश्वसितुं श्रुत्वा त्वद्विधेन विशांपते ॥ ११ ॥
अस्थिरत्वं च सञ्चिन्त्य पुरुषार्थस्य नित्यदा ।
तस्योदये व्यये चापि न चिन्तयितुमर्हसि ॥ १२ ॥
श्रुत्वेतिहासं नृपते समाश्वसिहि मा शुचः ।
व्यसने त्वं महाराज न विषीदितुमर्हसि ॥ १३ ॥
विषमावस्थिते दैवे पौरुषेऽफलतां गते ।
विषादयन्ति नात्मानं सत्त्वापाश्रयिणो नराः ॥ १४ ॥
ये चेदं कथयिष्यन्ति नलस्य चरितं महत् ।
श्रोष्यन्ति चाप्यभीक्ष्णं वै नालक्ष्मीस्तान्भजिष्यति ॥ १५ ॥
अर्थास्तस्योपपत्स्यन्ते धन्यतां च गमिष्यति ।
इतिहासमिमं श्रुत्वा पुराणं शश्वदुत्तमम् ॥ १६ ॥
पुत्रान्पौत्रान्पशूंश्चापि लभते नृषु चाग्र्यताम् ।
आरोग्यप्रीतिमांश्चैव भविष्यति न संशयः ॥ १७ ॥

इति नलोपाख्याने सप्तविंशतितमोऽध्यायः ।



# NOTES.

## The Tale of Sâvitrî.

When Draupadī was rescued from the hands of Jayadratha, who had carried her off in the absence of the Pāṇḍavas on a hunting expedition, Yudhishṭhira, who was surrounded by a number of sages, turned to one of them, Mārkaṇḍeya, and asked him whether he had seen or heard anyone whose lot had been worse than his own. The sage then told Yudhishṭhira the story of Rāma's life. Thereupon Yudhishṭhira said to the sage that he did not grieve for himself so much as for his devoted spouse and asked him whether he knew such an ideal of love and devotion as Draupadī. Upon this, Mārkaṇḍeya told him the story of Sāvitrī.

The story of सावित्री occurs in Vanaparva, chapters 293–299 of the Bombay edition of the Mahābhārata, chapters 292–98 of the Calcutta edition and chapters 294–300 of the Kumbhakonam edition.

### Chapter I.

VERSES 1–10. **1** हरणं....राज्यस्य The Pāṇḍavas lost their kingdom in gambling. **2** दुरात्मभिः refers to Duryodhana and his brothers. कृष्णया = द्रौपद्या. तारिता वयम् This refers to the fact that द्रौपदी freed the Pâṇḍavas from the slavery of Duryodhana, which they had incurred in gambling, by asking for their freedom when धृतराष्ट्र was pleased to give her boons (वर). धृतराष्ट्र उवाच। वरं वृणीष्व पाञ्चालि मत्तो यदभिवाञ्छसि । वधूनां हि विशिष्टा मे त्वं धर्मपरमा सती॥ द्रौपद्युवाच। ददासि चेद्वरं मह्यं वृणोमि भरतर्षभ। सर्वधर्मानुगः श्रीमानदासोऽस्तु युधिष्ठिरः ॥ सभापर्व अ. 71. verses 27–28 and ff. जयद्रथेन...बलात्—when the Pāṇḍavas had been away Jayadratha came to their hermitage and forcibly carried off Draupadī. When the Pāṇḍavas returned, they pursued him, vanquished him,

brought back Draupadī and made Jayadratha acknowledge that he was the slave of Draupadī. The story is told in chapters 265-273 of Vanaparva. **5** मद्रेषु—According to the arrangement of countries given in वराहमिहिर's बृहत्संहिता XIV 32-33, मद्र was the chief district of the north of India. According to General Cunningham, मद्रदेश extended from the Bias to the Jhelam. ब्रह्मण्य: friendly to Brāhmaṇas, pious. सत्यसन्ध: true to his word सत्या सन्धा प्रतिज्ञा यस्य. अतिक्रान्तेन वयसा because his age ( manhood ) was passing off ( without issue ). **9** सावित्र्या with the celebrated Vedic Mantra 'तत्सवितुः' &c. which is to be repeated by every Brāhmaṇa in his morning, midday and evening prayers. N explains "सावित्री सवितृकन्या तद्दैवत्यया ऋचा, सा च 'सोमो वधूयुरभवत्' ( ऋग्वेद X. 85. 9 ) इति." षष्ठे...काले in the 6th part of the day ( of 12 hours ) divided into eight parts *i. e.* in the afternoon.

Verses 11-30. **11** रूपिणी in flesh and blood. **13** सर्वात्मना च भक्त्या with wholehearted devotion. **14** प्रमाद: carelessness. Mark the locative with प्रमाद. **17** पितामहः=ब्रह्मा. **18** स्वयम्भुः—म्भूः=ब्रह्मा. **19** उत्तरम् reply *i. e.* a renewed request for sons. नियोगेन = आज्ञया. **23** प्रतिज्ञाय having accepted. **23** मानव्याः = मनुपुत्र्याः. शुक्ले in the bright half of a month. **24** क्रिया: Purificatory rites, such as जातकर्म &c. **25** हुतया ( by one ) to whom oblations were offered. **26** विग्रहवती possessed of a body. **28** प्रतिवारित: overwhelmed. **29** पर्वणि on the new moon or full moon day. **30** सुमनसः ( देवस्य, इष्टदेवतायाः 'सुपर्वाणः सुमनसस्त्रिदिवेशा दिवौकसः' इत्यमरः ) शेषाः प्रसादपूर्वकं दत्तानि माल्यानि प्रसादभूता माला इत्यर्थः. N quotes the विश्वकोश 'प्रसादान्निजनिर्माल्यदाने **शेषा**नुकीर्तिते'. The word is शेषा. Compare 'तथेति **शेषा**मिव भर्तुराज्ञामादाय मूर्ध्ना मदनः प्रतस्थे' कुमारसंभव III. 22.

Verses 31-42. **31** निवेद्य having offered. **33** प्रदानकालः proper time for giving away ( in marriage ). **35** धर्मशास्त्रेषु in smṛitis like those of Manu. **36** वाच्य: deserving blame. अप्रदाता ...वाच्यः— compare मनुस्मृति IX. 4 'कालेऽदाता पिता वाच्यो वाच्यश्चानुपयन्पतिः । मृते भर्तरि पुत्रस्तु वाच्यो मातुररक्षिता ॥' अनुपयन् ( अ+उपयन् pr. p. of इ with उप ) not approaching ( his wife ). **38** अनुयात्रम् retinue, attendants.

